# चिन्मङ्गलम्

रचयिता


रामशङ्कर अवस्थी



प्रकाशक

अभिषेक प्रकाशन

११७/८१ क्यू, शारदानगर, कानपुर

पुस्तक का नाम — चिन्मङ्गलम्

रचयिता — रामशङ्कर अवस्थी

प्रकाशक — अभिषेक प्रकाशन
११७/८१ क्यू, शारदानगर
कानपुर – २०८०२५

मुद्रक — शारदा प्रेस
११७/८१ क्यू, शारदानगर
कानपुर – २०८०२५

मूल्य — पैंतीस रुपये मात्र

# वन्दना

यो दर्शयति सन्मार्गम्, ज्ञानज्योतिर्ददाति यः ।
निर्माति सुन्दरं पात्रं यस्तस्मै गुरवे नमः ।१।

ईक्षे प्रभामृणं शिष्यः कविकुलकीर्तिलोलुपः ।
चिद्रसं, सोम! देह्यस्मै, जाड्यान्धं हर, हे गुरो ।२।

त्वमेव शक्त्या क्षमया क्षमासि
त्वमेव शक्त्या ह्यमला रमासि ।
त्वमेव शक्त्या रसदा कलासि
त्वमेव भूमङ्गलमङ्गलासि ।३।

त्वं स्वादरूपं सलिलेषु, मातः !
त्वं सौरभं चन्दनपादपस्य ।
अगाधपाथोधिगभीरता त्वम्
त्वं निर्मलत्वं च विधोः प्रभायाम् ।४।

त्वं दाहकत्वादनलः प्रचण्डः ।
त्वं तेजसा द्योतितभानुबिम्बः ।
त्वं शीतलत्वात् हिमरश्मिकान्तिः
मंदाकिनी त्वं च पवित्रतायाः ।५।

त्वं निर्गुणा, त्वं परमेश्वरी, 'त्वं
रूपेण भिन्ना सगुणाप्रतीतिः ।'
त्वामर्चयामि, मनसा व्रजामि,
वाञ्छामि भक्तिं, शतशः नमामि ।६।

प्रकाशवसनां शुक्लां कुन्ददेहप्रकाशिनीम्
मौक्तिकदशनां देवीं हिमांशुद्युतिहासिनीम् ।
अमृतरसनां वन्दे सर्वलोकोपकारिणीम्
विबुधपूजितां शक्तिं जाड्यतमोऽपहारिणीम् ।७।

शक्तिं देहि महाशक्ते ! सौख्यदे ! जगदम्बिके !
देहि पुण्यं, प्रभां देहि देहि, मे वाञ्छितं फलम् ।।
निर्गुणे ! सच्चिदानन्दे ! प्रणतोऽस्मि भजाम्यहम् ।
देहि मे भगवद्भक्तिं, देहि मे चिन्मयं रसम् ।८।

❦❦❦

# प्ररोचना

भाषा मानवजीवनस्य प्राचीनतमा उपलब्धिः। भाषया वयं स्वकीयं हृद्गतं भावं व्यक्तीकुर्मः। यदि अस्मिन् संसारे भाषा न स्यात् तदा का गतिर्भवेत्—

वाचामेव प्रसादेन लोकयात्रा प्रवर्तते।
इदमन्धन्तमः कृत्स्नं जायेत भुवनत्रयम्॥
यदि शब्दाह्वयं ज्योतिरसंसारं न दीप्यते।

भाषासाधनस्य जीवने महती आवश्यकतास्ति। एषा अस्माकं विचारविनिमयस्य साधिका। यद्यपि जगति अनेका भाषाः सन्ति, तत्र संस्कृतभाषा सर्वास्वपि भाषासु प्रशस्यतमा वर्तते। एषा भाषा अनेकभाषाणां जननी। यं ऋग्वेदं विद्वांसः संसारस्य आद्यं पुस्तकं स्वीकुर्वन्ति स ऋग्वेदोऽपि संस्कृतभाषायां विराजते। सैषा देवभाषा, देववाणी, गीर्वाणवाणीति कथ्यते। अतोऽस्या महत्त्वं लोके ख्यातं वर्तते।

कवयः सन्ति क्रान्तदर्शिनः। क्रान्तदर्शित्वात् कविस्तावद् ईश्वररूपेण उपन्यस्तो वर्तते ईशोपनिषदि— "कविर्मनीषी परिभूः स्वयम्भूः"। मुण्डकोपनिषद् कवीनां विषये प्राह—

तदेतत् सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यन्।
तानि बहुधा सन्ततानि (मुण्डक० १/२/१)

कवयः सत्यदर्शिनः तत्त्वार्थविदश्च सन्ति। अत एव ते ऋषिभिर्नातिभिन्नाः। मन्ये, ऋषिरेव कविपदमलङ्करोति। यः तत्त्वदर्शने समर्थः, अलौकिकप्रतिभोपेतः, सहृदयानन्दवर्धनपरः स एव कविः। उच्यते भट्टतोतेन—

नानृषिः कविरित्युक्तम् ऋषिश्च किल दर्शनात्।
विचित्रभावधर्मांश तत्त्वप्रख्या च दर्शनम्॥
स तत्त्वदर्शनादेव शास्त्रेषु प्रथितः कविः।
दर्शनाद् वर्णनाच्चाथ रूढा लोके कविश्रुतिः॥

जगति कविकर्म क्लिष्टतमं वरीवर्ति। कविकर्म केवलं वस्तुवर्णनपरमेव न। तत्र कविः मनोरममार्गेण सत्यं। शिवं सुन्दरं च खलु संयोजयति।

कथयति वेदव्यासः—

शास्त्रे शब्दप्रधानत्वमितिहासेषु निष्ठता ।
अभिधायाः प्रधानत्वात् काव्यं ताभ्यां विभिद्यते ॥

सर्वा विद्याः सर्वाः कलाः काव्याङ्गभूताः। अत एव कविकर्म सर्वथासाधारणं वर्तते—

न स शब्दो न तद् वाच्यं न सा विद्या न स कला ।
जायते यन्न काव्याङ्गम्, अहो भारो महान् कवेः ॥

श्री रामशङ्कर अवस्थी संस्कृते काव्यं रचयति—इति प्रमोदस्य विषयः। श्री अवस्थी प्रसादगुणोपेतं वैदर्भीरीतिविभूषितं ललितललितं हृद्यम् अनवद्यं मधुरं काव्यं प्रस्तूय आधुनिकसंस्कृतसाहित्यं पृणाति। सरसं सरलं भावान्वितं काव्यं विलोक्य प्रसीदामि। चिद्विलासः चिरं विलसतु इति मे कापि हार्दिकी शुभकामना। अस्य आधुनिकपद्धत्या विनिर्मितं काव्यं दृष्ट्वा मनो मे मोदते। सत्यं, पश्यतु—

मनोहरति परिवर्तिततरङ्गैः स्मितप्रभा विलसन्ती।
परिस्फुरति मन्दिरे दामिनी शोभामिव पश्यन्ती।
तरणिकरद्युतिवर्णैः क्रीडति हिमावरितघनमाला।
प्रसादयति चित्तं गृह्णन्ती नवनवरूपं ज्वाला ॥

कवेः चिद्रसविधानादेकं पद्यं भावयन्तु भावकाः—

अस्त्याचारो मनोविमलता, चिन्मङ्गलरसदानम्।
कल्याणाय चरित्रोज्ज्वलता, प्रभया राष्ट्रोत्थानम् ।
जीवनपावनता गङ्गायाः, रसभृतमनः प्रयागः।
सेवासुरभितजगदनुरागः, यशोधवलितस्त्यागः ॥

एवं कथयितुं शक्यते यत् श्री अवस्थी स्वकीये काव्यरचनाव्यापारे सर्वथा साफल्यमावहति। अहं कामये यदसौ सततं संस्कृतकाव्यरचनया भगवतीं सुरभारतीं सम्पूजयेत् । जयतु कविभारती।

नवरात्र, आश्विन,
२०५० वि० सं०

डा० शिवबालक द्विवेदी
सम्पादकः
नवप्रभातम्
११७/८१ क्यू शारदानगर, कानपुरम्

# कविकथनम्

अस्ति सौन्दर्यम्, स्वप्रकाशानन्दरञ्जितं महाचेतनायाः भानमयं दिव्यं च रहस्यमयं स्फुरणम् । महाचेतना चेतनां नानासौन्दर्यवर्णैरञ्जयति । तस्या अनुकम्पया प्रकृतिश्चेतनायाः रञ्जितानि सौन्दर्यबिम्बानि गृह्णाति, दर्शयति, मनोहारिणी प्रतिभाति च ।

जननी यत्र, विद्यते ज्योतिस्तत्र रसो मधुमासः ।
चिद्विलसति, सौन्दर्यमीक्षयति बिम्बैः प्रकृतिविलासः ॥

—चिद्विलासः (छं. सं. ५)

जीवरूपोऽहमस्मि । मम चेतनायाः सौन्दर्यमस्ति महाचेतनायाः सौन्दर्यम्, महाचेतना मे जननी । आत्मोच्चतायाः शिखरे मम चेतना यत्सौन्दर्यं पश्यति तदस्ति महाचेतनायाः सौन्दर्यम् । आत्मोच्चताशिखरसौन्दर्यबिम्बमस्ति हिमाद्रिसौन्दर्यम् ।

भास्करदर्शनमात्मद्योतो, द्युतिहासो, मधुमासः ।
भावोन्नयनहिमाद्रेः शृङ्गे चिन्मयधवलविलासः ॥

—आत्मोच्चतायाः शिखरे (छं. स. ५)

चेतनासिंधुतटसौन्दर्यबिम्बमस्ति प्रकृत्याः सिंधुतटसौन्दर्यम् । चेतनालोके वा प्रकृतिलोके यत्सौन्दर्यमस्ति तदस्ति प्रभासौन्दर्यम् वा मे जननीसौन्दर्यम् । इदमस्ति सौन्दर्यरहस्यम् ।

प्रकृतिस्तु माया । मायासौन्दर्यं रससारं मन्यमानोऽहं जननीं नास्मरम् । तिरोभूता सौन्दर्यविधायिका मङ्गलाशक्तिः । तर्हि सौन्दर्यमलुप्यत् । ज्योतिरलुप्यच्चाकर्षणरङ्गास्तिरोभूताः । तमोऽपाशयन्माम् । पराम्बिका प्रभालोके वसति । मम स्वरूपमस्ति प्रकाशमयं किन्त्वात्मज्ञानभावादात्मनः सूर्यरूपं न

पश्यामि, मातरं न पश्यामि, भ्रमतिमिरं पश्यामि केवलम्
इदमेव तमोबन्धनम् ।

प्रसूवियोगो, बंधनयोगो, लोपश्चितिप्रभायाः ।
सीदति तमसि रसो, भीषिकया दशत्यहिर्मायायाः ।।

—कथं पश्यामि पूर्वरङ्गम् (छं. सं. १४)

राष्ट्रभक्तिर्ददाति चिन्मङ्गलरसम् । देशसेवया पद्मा (वाजीजनो) नाम वाराङ्गनापि तमोबन्धनान्मुक्तिमलभत । वाराङ्गना वीराङ्गनाभवत् । नारीदलेन समं पद्मा स्थाने स्थाने चञ्चलेवास्फुरत् । असौ स्वातंत्र्यसंग्रामविजयहेतोर्जागरणगीतैर्वीरानाह्वयत् ।

आह्वयामि विक्रमरसहासम्, वीरभावदामिनीविलासम् ।

—वंदे मातरम् (छं. सं. ३०)

भ्रातः ! शृण्वेकताभियानम्,
कर्मजागरणगीताह्वानम् ।।

ते जीवनं सुरक्षां कर्तुम् ।
ते जीवनं स्वदेशं भर्तुम् ।
ते जीवनं दनुजसंहर्तुम् ।
ते जीवनं राष्ट्रमुद्धर्तुम् ।

शृणुतात् राष्ट्रभक्तिभृतगानम् ।
कुरु भारतसेवारसदानम् ।।

—वंदे मातरम् (छं. सं. ३२)

देशस्वातंत्र्यहेतोरकरोज्जीवनबलिदानं भारतनन्दिनी । संकल्पेन सहासौ गात्रमपवित्रमुत्सर्गरक्तेन क्षालयाञ्चकार । सा शवहेतोर्भारतमातुः क्रोडं चात्महेतोः पराम्बिकाञ्चलमवाप । सा चि-

न्मङ्गलरूपजनन्या अङ्कमवाप ।

देशभक्तिमन्तरेण चिन्मङ्गलं नास्ति । देशभक्तिगङ्गायामेको रसो विद्यते । प्रेमत्यागसेवोत्सर्गसमष्टिर्मानवता । राक्षसीदृष्टिर्भेदभावं पश्यति ।मिथ्या जातिबन्धनम्। न कोऽप्यस्पृश्यो न कोऽप्यपवित्रश्च । एकोऽस्ति सार्वभौमधर्मः करोति यश्चिन्मङ्गलविधानम् । यो लोकमङ्गलाय जीवति, तस्मै माता प्रसीदति । धर्मो दिशति लोकमङ्गलपन्थानम् । लोकमङ्गलं दत्ते चेतनायै रससारम् । लोकमङ्गलमेव बन्धनमुक्तिद्वारम्, पराम्बासान्निध्यसुखप्राप्तिसोपानम् वा चिन्मङ्गलरहस्यम् ।

संस्कृतभाषायां काव्यसृजनायाभिनवचेतनातरङ्गं जागरयितुं यतेऽहं । धारां प्रवाहयितुं पथावरोधानपहरणमावश्यकं मन्ये ।सहृदयपाठकस्य रसचर्वणहेतोः काव्यदुरूहत्वमपाकर्तुमावश्यकं मन्ये । अद्य संस्कृतभाषायै समानुकूलपर्यावरणसृजनहेतोः सरलता नाम सञ्जीवनीशक्तिः ।सरलतामाश्रित्य संधिसमासमुक्तशैलीप्रयोगं प्रति समादराम्यहम् । क्वचिन्मधुरकोमलकान्तपदावलीं याचितुं जयदेवमुखं पश्यामि। क्वचिद्गीतसृजनहेतोः प्रसादं स्मरामि । श्रद्धेयो डा. शिवबालको द्विवेदी संस्कृतभाषायां काव्यसृजनाय प्रेरणादाता । आचार्यदेवस्यौदार्यं प्रति कृतज्ञोऽस्मि । विबुधभावस्य द्रवितसान्निध्ययोगश्चिन्मङ्गलाय भवतु ।

रामशङ्कर अवस्थी

२५ अगस्त १९९३

# अनुक्रमणिका

ऍं

# चिद्विलासः

क्रियते येन तमोविध्वंसः, प्रभया विलसति हंसः ।
तस्य करैः शोभ्यते शिरसि ते हिमसितनगावतंसः ।
अभिनन्दति सुरतटिनीहारो, नंदति तारस्तारः ।
प्रक्षालयति तरङ्गैश्चरणौ श्रद्धापारावारः ।।१।।

त्वं प्रयागशुचितारसगङ्गा मानसविमलतरङ्गा ।
त्वं विधुकलया जीवनरङ्गा ममताधारोत्सङ्गा ।
हृदयं प्रवाहयसि मातस्त्वं शुचिते ! दत्से स्नेहम् ।
हे वत्सले ! मनोहरितंकुरु, वन्देऽहं वन्देऽहम् ।।२।।

आदिकविं, वन्दे, श्रीव्यासं, कालिदासकविलासम् ।
माघश्रियं नौमि कविहासं, भासं कलाविकासम् ।
वन्दे, श्रीहर्षं, जयदेवं. भारविकाव्यसुवासम्,
कविताभवभूतिं भवभूतिं, सूरं, तुलसीदासम् ।।३।।

वन्दे गुरुं कवीन्द्ररवीन्द्रं, वन्दे कव्याह्लादम् ।
कविभूषणं प्रसादं वन्दे, याचे कलाप्रसादम् ।
नास्मि कविः, प्राप्नोमि कथञ्चित् काव्यसर्जनोत्साहम् ।
जननीकृपातरितमिव तरणी कविभवनदीप्रवाहम् ।।४।।

जननी यत्र, विद्यते ज्योतिम्
तत्र रसो मधुमासः ।
चिद्विलसति सौन्दर्यमीक्षयति
बिम्बैः प्रकृतिविलासः ।।५।।

नदी प्रभाहारेव लसति, भूः लसति, शाटिका हरिता ।
शतरूपिणी शोभते प्रकृतिः कुसुमाभरणाभरिता ।
स्मयते कान्त्या, विहसति कुसुमैर्नृत्यति भावतरङ्गैः,
आकर्षयति सौरभैः, रसयति रसैः, रञ्जयति रङ्गैः ॥६॥

दत्ते, नयनसुखं जलजातं, गीतमाधुरीं वातः,
सरसी जीवनरसमवदातं प्रभां च सुधाप्रपातः ।
श्रीः प्रापयति हरितभवलासं, धराचेतनाहासम्,
हिमकणमुक्ताभिस्तारकितं जीवनकुसुमविकासम् ॥७॥

द्रवति हिमोऽवतरति प्रपातः क्वचित्प्रभाप्रवाहः ।
प्रस्तरवाद्यं नदी वादयति वीचिकरैः सोत्साहः ।
सरसीवारिणि नृत्यति तरणी क्वचिन्मनोरसभरणी ।
क्वचित् शष्परङ्गेन रञ्जयति मुग्धचेतनां धरणी ॥८॥

पुष्पं पुष्पं रङ्गमिषादिव पठति विमोहनमंत्रम् ।
सृजति रङ्गपरवलयं गगनं चुम्बन् धारायंत्रम् ।
हरितप्रच्छदशोभितकूले कुसुमानां शय्यायाम्
प्रकृतिरुपवसति, रूपं पश्यति जलदर्पणे सरस्याम् ॥९॥

प्रकृतिस्तोये चित्रपटे वा पश्यति चन्द्रं मित्रम् ।
पश्यति गिरिं, मन्दिरं पश्यति, पश्यति चित्रं चित्रम् ।
पश्यत्युषसं, ज्योत्स्नां पश्यति, पश्यति संध्याबालाम्,
हरितधरां पश्यत्युद्यानं पश्यति न्याम्बरशालाम् ॥१०॥

हिमकिरीटिनी सरसीहृदया हरिताम्बरा सुनीता
मनोहरति घनधारायंत्रैः रङ्गवर्षिणी स्त्रीता ।
एकान्ते श्रृणोति रसमाप्तुं कलकलनिर्झरगानम्,
गिरिच्छटां पश्यति चारोहति हरितशस्यसोपानम् ॥११॥

आलोकयते पुष्पलोचनैर्धत्ते तटिनीहारम्,
रमते शिवे, प्रयाति कामनातारायतनद्वारम् ।
सरलो गगनं स्पृशति, तडागो राजति बिम्बग्राहः ।
ऊर्ध्वं व्रजति, नन्दने नन्दति दारुमङ्गलोत्साहः ॥१२॥

पूरयते गगनं प्रद्योतो निर्झरजलाद्विकीर्णः ।
चैतन्यं भ्राजयति च विमले सलिले सूर्यैरुदीर्णः ।
समुल्लसति चिद्रसभृतशिखरो, लसति कुण्डजलधारा ।
प्रस्तरमुकुराः भान्ति, लक्षयति रूपं तारातारा ॥१३॥

शतवर्णैश्चेतनां रञ्जयति रविरुदेति रसदानी ।
अरुणहिरण्मयरूपधारिणी हरति मनांसि हिमानी ।
उत्सो मनः प्रीणयति, दत्ते तरलप्रभया रङ्गम् ।
कणे कणे देदीप्यमानमिव पश्यति मनःपतङ्गम् ॥१४॥

प्रभां तन्वते शम्पाछायाः, यामिन्यां द्योतन्ते ।
लीयन्ते चानन्ते ताराः शशी च दीपायन्ते ।
सूर्योदयं चेतनादृष्टिः पश्यति धवलैः शृङ्गैः ।
हरितरसं प्राप्नोति जीवनं हेमारुणिततरङ्गैः ॥१५॥

प्रसाधिता हिमकणैः, शोभते कण्ठे तटिनीमाला,
सेवकपोलधारिणी दिव्या शैलद्रोणीबाला ।
कुसुमजटितकौशेयशाटिकां हरितवर्णपरिधानम् ।
धृत्वा लसति वक्रगिरिपंथे, गायति निर्झरगानम् ॥१६॥

सौन्दर्येण मोहयति चित्तं प्रच्छदाम्बरानीला,
हरितमना हिमधवलहासिनी विमलजीवना श्रीला ।
वाण्या सुधाप्रपाता सरसीहृदया द्युतिरसदात्री,
कुसुमितवर्णवैभवा द्रोणी नन्दनसुषमाधात्री ॥१७॥

मनोहरति परिवर्तितरङ्गैः सितप्रभा विलसन्ती ।
परिस्फुरति मन्दिरे दामिनी शोभामिव पश्यन्ती ।
तरणिकरद्युतिवर्णैः क्रीडति हिमाबरितघनमाला ।
प्रसादयति चित्तं गृह्णन्ती नवनवरूपं ज्वाला ॥१८॥

जपाप्रसूनचयैः स्थलपद्मैः हरितसुरभिशय्यायाम्
लसति, नभोबिम्बं जलमुकुरे पश्यति दयितच्छायाम् ।
मनोहरन्ति हसन्ती विकसितरञ्जितकुसुमसरलता,
प्रभामयी सौरभितमसृणता, रसयन्ती कोमलता ॥१९॥

अधोपतति वसुधारा शैलाद्द्रुतगतिवाहीतीरः ।
जलकणेष्वसंख्येषु भञ्जयति सलिलं तीव्रसमीरः ।
शून्यं चाच्छादयति कणानामुदकप्रभाप्रसारः ।
चेतनया दृश्यते समक्षे व्याप्तं घननीहारः ॥२०॥

तुङ्गाचलाः तापसाः दधते धवलामलपरिधानम् ।
मंदाकिनी लसति सितसलिला गायति कलकलगानम् ।
प्रभानिर्झरिण्यः क्रीडन्त्यः पर्वतादवतरन्त्यः
भान्ति नदन्ति मनोहारिण्यः गङ्गां संगच्छन्त्यः ॥२१॥

कुण्डं तरति मनोहिमखण्डो, रसं वहति सोत्साहः ।
द्युतिरेखेवाचलादवतरति गङ्गानदीप्रवाहः ।
वासयते शुचियशसा धरणीं जगदुद्धारकभावः ।
भवमङ्गलकामाय मोहयति भूपतिहृदयद्रावः ॥२२॥

शिलां चूर्णयन्ती रसगङ्गा रञ्जितभावाकाशे ।
स्वर्णाचले शस्यसोपानं सूर्योदयप्रकाशे ।
धराधरो धृत्वा धवलाम्बरमिव हिमवर्षीशीतम् ।
मनोहरन्ति, कर्णरसदाता कलनिर्झरसङ्गीतम् ॥२३॥

वातो वाति, वेपते सेतुर्यथा, लोक्यते लोलः ।
नर्तयतीव मनो, जनभारो धुनोतीव, हिन्दोलः ।
हरितधरायां विलसति गङ्गाहरिद्वाररसधारा ।
आरात्रिकदीपो द्युतिकुसुमं तरति सलिलमिव तारा ॥२४॥

सर्पाकारं शैलारोहिणमूर्ध्वरज्जुपन्थानम्
दृष्ट्वा समनुभूयते रुचिरं स्वर्गामीसोपानम् ।
चण्डी द्रवति नीलनगशिखरे, पश्यति पुरं प्रकाशे ।
मनसा भक्तो गिरिमारोहति, विलसति भावाकाशे ॥२५॥

हरितमनः कुरुते गिरिदेशो प्रकृतिरक्तो हितकारी ।
पुष्पसुगंधैः हरति मानसं वायुः स्वेच्छाचारी ।
गिरिच्छविं पश्यति डयते सितघनचितिदृष्टिमराली ।
शिखरं गमयति पथामिधाना दशति न कृष्णाव्याली॥२६॥

गगनमत्यजज्जननी गङ्गा, ममतासुधातरङ्गा ।
काशीं सुतां पालयति पयसा, गात्रेणोज्ज्वलरङ्गा ।
दिनकरेण पुष्यते मृगाङ्कः, प्रसूं विना यो रङ्कः,
शाययतीव वीचिपर्यङ्कः, सुतं लालयत्यङ्कः ॥२७॥

स्नाति जले प्रतिबिम्बितवाटः, पश्यति हृष्यति घाटः ।
याति, निम्नगामङ्के क्रीडति, रसं नयति धाराटः ।
अलङ्करोति च पश्यति नगरी रूपं तटिनीतीरे ।
मुह्यति, नन्दति, मीलति नयनं, हसति दर्पणे नीरे ॥२८॥

पयस्विनी पुत्रीयति कन्दं, बिम्बरूपमुडुवृन्दम् ।
पीयूषं पाययति, मन्यते स्वानन्दो भवनन्दम् ।
श्वेताम्बरा सिकतया, यशसा धवला चोज्ज्वलकाया,
वीणोर्मिः, कलकलनिनादिनी सरित् शारदाच्छाया ॥२९॥

हरति पिपासां सरसः सरसोरसः, तर्पयति हृदयम् ।
क्षुत्हर्तुं माह्वयति पवनं द्रुमफलैरुपवनं सदयम् ।

सुमनसुमनसो विकासयति मृदुलतालता ह्युद्याने ।
जपति 'शिवायों नमः' श्रद्धया भक्तः पूजास्थाने ॥३०॥
गङ्गा सलिलपटे चित्रीयति रवि विधु द्युतिमन्तम्,
द्योतितकुसुमाकरमम्लानं भावाम्बरमुद्यानम् ।
मधुरफलैर्जगतः क्षुत्शमयति, रसयति रसां रसालः ।
प्रसादयति भर्वचित्तं, निवसति कूले कण्ठेकालः ॥३१॥
प्रभारञ्जिता शालाशाला सितवसना श्रीबाला
लताप्रवाला नीरदमाला हरति मनांसि विराला ।
वपुः सज्जयति नूतनवसनं, प्रभा सज्जयति सदनम्,
मनः सज्जयति रञ्जितभावः, स्मितिः सज्जयति वदनम् ॥३२॥
खं चुम्बति शैलो निर्भीकः, प्रोन्नतधियः प्रतीकः
हंसी गिरा मानसे विमले लसति, पथो नालीकः ।
जीवति कला, संस्कृतिर्जीवति, रक्षति कालमतीतम् ।
जीवति नृत्यं, जीवति चित्रं, मनोहरति सङ्गीतम् ॥३३॥
जनजीवनं रसयति त्यागो, हृदयं शुच्यनुरागः ।
लहरिलतायाः ज्योतिष्कुसुमैर्लसति नदीव तडागः ।
किरति मरन्दं पवनो मंदो, वाति गिरौ स्वच्छंदः ।
अरविन्दं नन्दत्यानंदो विकसति, रसयति कंदः ॥३४॥
हरितश्रिया रञ्जयति धरणी नयनमनोभवभरणी ।
नृत्यति मोहकरूपधारिणी जलविहारिणी तरणी ।
मीनोरगखगरूपाकारो भावस्तथैवतारः ।
क्रीडति कूले जले, ह्लादयति चित्तं पारावारः ॥३५॥
शतशतरङ्गाः ह्यङ्गे ह्यङ्गे रेणोः, रङ्गे रङ्गे ।
कराः, करेषूद्योततरङ्गा, रविरुद्योततरङ्गे ।
मिश्रयतीव घटाश्यामलतां चारुणघनप्रवातम्
प्रकृतिः प्राप्य विशेषान् रङ्गान् विरचति सिकताजातम् ॥३५॥

नभः संतरति यानद्योतः, पश्यति जलेऽन्तरीपः ।
बिम्बस्तरति रजन्यां सिन्धुं यथा संतरति द्वीपः ।
द्योतन्ते नृत्यन्तो रङ्गाः सिंधुजले गंभीरे ।
हरति चाकचक्येन चेतनां गगने चाम्बुधिनीरे ॥३७॥

दिनकरबिम्बः स्पृशति पयोधिं, कुरुते हाटकवर्णम् ।
द्युतिकुहकेन भवति जलराशिः सकला द्रवितं स्वर्णम् ।
हृदयं रसयति हाटकसलिलं शतपरिवर्तितरङ्गैः,
रविः प्रीणयति जगत् प्रभायाः रङ्गैः पीततरङ्गैः ॥३८॥

अरुणः कुरुते रक्तं वदनं, कुरुते रक्तं रदनम् ।
रक्तं सरितं रक्तं सिंधुं रक्तं सदनं छदनम् ।
रक्तं कायम् रक्तं छायां रक्तं तरुणं तरुणम् ।
वनं घनं चोपवनं हि कुरुते भास्वानरुणं वरुणम् ॥३९॥

अतिशयपीनो भाग्याधीनः किरणविहीनो दीनः ।
रुधिरं दत्त्वा पावकगोलः सिन्धौ भवति बिलीनः ।
अरुणः तारादीपकलसितं रक्तं कुरुते स्थालम्,
रक्तं सरोवरं, हिन्तालं कुरुते रक्तं तालम् ॥४०॥

रुधिरं भवति यथा वृन्ताकी, जलं भवति वृन्ताकी ।
उड्वश्रूणि पातयति संध्या, मज्जति तमसि वराकी ।
रक्तं दृष्ट्वा श्यामलरूपं क्रमशः जलसंसारे
रक्तं रव्यनुरक्तं दृष्टिं व्यथयति पारावारे ॥४१॥

नारिकेलसमुदायः सहते तरणिविरहसंतापम् ।
शिरोभनक्ति पतति तरुशाखा कुर्वन्तीव विलापम् ।
उड्वश्रूणि पातयति गगनं, सीदति तिमिरे रुद्रे ।
पवनो विलपति, हृदयं मज्जति कृष्णे शोकसमुद्रे ॥४२॥

----

# तमोबन्धनम्

व्यचरम् वने नन्दने, मातः ! यत्रावात् परिमलभृतवातः ।
त्वया सहापश्यम् तरुषण्डम् । चापश्यम् सुरपतिकोदण्डम् ।
कुहकमपश्यम्, हृदं विशालम् मानसरसतरङ्गमुत्तालम् ।
रजतकिरीटलसितगिरिभालम्, क्षितिजमरुणघनमुडुप्रवालम् ।।१।।

वत्स ! पथि परिमलभृतवातम्, नयनेऽवासयच्च जलजातम् ।
जनन्यवादीत्, पश्य कृशानुम् । लक्षय मण्डलमात्रं भानुम् ।
ज्योतिर्नशनं त्वयानुमेयम् । त्वया नात्र सौन्दर्यं पेयम् ।
श्रेयस्करवचनं मन्तव्यम् । त्वया सपदि गेहं गन्तव्यम् ।।२।।

पश्यसि कथं न दिनावसानम् ? पश्यसि नारुणमात्मज्ञानम् ।
मायां प्रति किमद्भुतं स्नेहम् ? तमोबन्धनं त्यज, चल गेहम् ।
"आयास्यामि लोकयन् मित्रम्, दृष्ट्वा मनोरञ्जकं चित्रम्,
प्रकृतिः प्रभामयी रसदात्री" श्रुत्वावदद्वत्सलाधात्री ।।३।।

नास्ति मायातमो, यत्र प्रसू मङ्गलमङ्गला ।
तत्र त्वया न गन्तव्यम्, यत्र प्रभा न वर्तते ।।४।।

विधिविपर्ययात् प्रभाविरक्तिः
यस्य, न रसमाद्रियते व्यक्तिः ।

तुभ्यं किं दत्ते रसभ्रमः ?
ज्योतिर्वृथा, लभस्व घनतमः ।
किं करोमि ? विस्मृतं स्वरूपम् ।
पत तिमिरं, मायारसकूपम् ।

धात्री तस्य मङ्गलाशक्तिः,

यस्य ज्योतिः शिवानुरक्तिः ॥५॥

तिरोहिताभून्ममताच्छाया । प्रभां जगार तमिस्रामाया ।
भयमजीजनत् कृष्णपयोदः । तमोबन्धनेऽभवत् प्रमोदः ।
पथं रुणद्धि वलाहकविघ्नः । ञ्चिवा मातरं विवशोऽरिघ्नः ।
प्रभया सह तिरोहिता माता । वक्रं भाग्यं तिमिरविधाता ॥६॥

सहे कथमहं भीतिं तापम् ? का शृणोति मम करुणविलापम् ।
हाहा कोऽपि न दयते स्तोकम् ! पद्ये कथं प्रभायाः लोकम् !
स्फुरति दामिनी, मेघाटोपः गर्जति, भयमुपजनयति कोपः ।
तमोवर्धते, मायापाशः । तिरोहितोऽस्त्यात्मनः प्रकाशः ॥७॥

सिन्धुतडिद्घननादमिषाद्भयतमो दर्शयति रङ्गाः ।
गिरीन् सृजन्ति जले चुम्बन्तः खं चोत्तालतरङ्गाः ।
तीव्रं धावति भयं, कम्पयति मनः, कम्पयति देहम् ।
तटं ताडयति लहरी लहरी, प्रत्यागच्छति गेहम् ॥८॥

जन्मोन्मीलति लोचनयुगलं, मीलति मृत्युर्वामा ।
प्रभासुखं घनशम्पास्फुरणं, जीवनरजनी श्यामा ।
चन्द्रशेखरात् प्रभा वियुक्ता भ्रमति तमः-संसारे ।
तडिल्लता मूर्च्छिता लीयते सिन्धौ घनान्धकारे ॥९॥

एकस्मिन् दिवसे खलु नियतिः तरुं शोषयति हरितम् ।
हरति वैभवं रिक्तीकुरुते गगनं तारकभरितम् ।
स्वप्नं किञ्च मनःक्षेत्रे किं बीजयुवामदवपनम् ।
पश्य जरावस्थायाः तपनं, जीवनकुसुमग्लपनम् ॥१०॥

जीवनमस्ति किञ्च किं विश्वं ?
सलिलबिम्बमभिधानम् ।
स्फोटसि, बिम्ब ! वृथा फुल्लसि किं ?
वृथा वहस्यभिमानम् ॥११॥

स्वार्थतमिस्रा गिरति चेतनां गिरति च धर्मालोकम् ।
जगदोकं ग्रसते, कविलोकं स्पृशति कम्पयन् स्तोकम् ।
हिल्लोलयति मोदयति वल्लीं स्वार्थपवनहिन्दोलः ।
आकर्षयति जीवनं विमलं कुहकतरङ्गो लोलः ॥१२॥

कपटहृदयमृदुलता दृश्यते प्रेम्णा लतासकाशे ।
मारुतेन, बध्यते वीरुधा रसमादकतापाशे ।
कुहकरसे मज्जिता मृदुलतालता व्रजत्यवसादम् ।
स्वार्थो मादकतया पाययति विषमादयति ह्लादम् ॥१३॥

मुग्धकुसुमपत्राणि भञ्जकः प्रभञ्जनोऽस्ति दुरन्तः ।
पतति मेदिनीं नन्दनविभवो, म्रियते व्रततिवसन्तः ।
स्वार्थतमो बध्नाति मानसं छलरसेन विषदाता ।
मनुजादो भक्षयति मनुजतां भ्रष्टाचारविधाता ॥१४॥

भ्रमयति मसृणकपटमृदुवर्णैर्दशति जीवनं व्यालः ।
ग्रसते शुचिताप्रभां, चेतनां हरति राहुभयकालः ।
रूढिं वहत्यन्धविश्वासः तमो वहति पाखण्डः ।
घनतमिस्रपाशेन बध्यते हन्त ! धर्ममार्तण्डः ॥१५॥

शून्यशिरस्येकं ( ०१ = ० ) सद्ज्ञानं, येन दभ्यते चित्तम् ।
शनिश्चरं वारयति, शुभैषी हरति भक्तगृहवित्तम् ।
रामचरितमानसं संतरति भक्तवलाको नीचः ।
छलरूपं गृह्णन् वञ्चयते प्रभुं मनोमारीचः ॥१६॥

अस्ति कुत्र सद्गुणसम्पत्तिः ? सद्वृत्तिः कल्याणी ?
कुत्र मङ्गलाप्रातिभशक्तिः ? कुत्र सत्यभूतवाणी ?
त्यागः कुत्र च जगदनुरागः यागः कुत्रादीनः ?
परसेवाव्रतहीनो लोकः तमो वहति रसहीनः ॥१७॥

प्रभाजीवनं नश्यति सत्त्वा
तमः प्रभावे स्तोके ।
पूर्वरङ्गमादित्यालोके
लोके कथमिह लोके ? १८॥६०॥

# कथं पश्यामि पूर्वरङ्ङ्गम्

आसीत् प्रकृतिरङ्गरसरसनम्, शैशवरङ्गविलसनम् ।
मसृणकान्तिभृतकुसुमविकसनम्, कोमलतायाः हसनम् ।
कुत्र शैशवं ? कुत्र जीवनं ? कुत्र विभातमतीतम् ।
नयने करुणकथां स्रावयतः, मनः स्रावयति गीतम् ।।१।।

प्रभाप्रसू कुत्रास्ति ? कुत्र मम रसमयजीवनरङ्ग: ।
हंत ! मानसेऽसीदत् नृत्यन् मम शिशुभावतरङ्ग: ।
मम तमसावृतजीवनपंथाः, तमसावृतसंसारः ।
चेतनया सह्यते बन्धने मायातमः प्रहारः ।।२।।

कथमुपैमि जीवनप्रभायाः ? तमो वमति भवशाला ।
कुतो क्षितिजरङ्गो ? न दृश्यते द्योतितविद्रुममाला ।
रञ्जितकिरणवैभवं लुप्तं, भावभवः श्रीहीनः ।
पीतारुणघनवर्णविलासः तिमिराम्बुधौ विलीनः ।।३।।

चित्तं हरति न लहरीनृत्यं, तुदते मधुकरगानम् ।
कोपोत्प्रेरणमात्रं मन्ये हाहा परभृततानम् ।
जननी तिरोहितास्ति गृहीत्वा नंदनहेमविभातम् ।
स्रावयामि मृद्नन् करयुगलं दृग्भ्यां व्यथाप्रपातम् ।।४।।

प्रभाधवलिमालसितमानसं गगनं शोभाशाली ।
गृहं, वसति यस्मिन् हा जननी मम शारदामराली ।
अस्मि विक्लवः क्षुधितो हंसो, मातुः कथं स्मरामि !
मायामेघतमिस्रां भित्त्वा कथं मानसं यामि !५।।

डाययति भ्रमयति च खेदयति कपटतमोभृतकाकः ।
शफरीनिगरणकलामुपदिशति विभ्रमवरटबलाकः ।

उडुबिम्बं जलबिम्बं दत्ते जगत्तडागे माया ।
नास्ति मौक्तिकं, हा करोमि किं ? भ्रमो मौक्तिकच्छाया ।।६।।

कथमाप्यते प्रकाशोत्संगः, कथमाप्यते पतङ्गः ।
लीयतेऽद्य घनविषान्धकारे जीवनरंगतरङ्गः ।
नास्मि नभोस्पर्शी, कथमीक्षे हिमगिरिरजतविलासम् ।
चात्मोच्चताशैलशुचितायाः शिखरे ज्योतिर्हासम् ।।७।।

पतङ्गिका शतवर्णधारिणी स्निग्धरञ्जिता काया ।
कुहकेनाकर्षयति न चित्तं प्रभामसृणतामाया ।
शैशवमित्रं मृदुलपलाशः पुष्पितजीवनलासः ।
प्रतीयते मे मनोऽनुकारी पावकधूम्रग्रासः ।।८।।

अन्तरेण जननीमुपैम्यहं पिकं रागरसभङ्गम् ।
विना वसंतं लोचयामि हा गानविरक्तं भृङ्गम् ।
कथं रसस्रावभृङ्गं वा प्रेक्षे कथं पतङ्गम् ?
पूर्वरङ्गमीक्षे, कथमीक्षे ह्रदसौन्दर्यतरङ्गम् ? ९।।

शैशव ! मित्र ! तिरोभूतस्त्वं, कुत्र गतोऽसि न जाने ।
अन्वेषये पूर्वरङ्गमहं जीवनविभावसाने ।
शैशवसङ्गिनि ! जीवनरङ्गिणि ! चक्रे मधुररसदानम् ।
मे स्वरेषु तेऽद्यापि तरङ्गिणि ! गुञ्जति कलकलगानम् ।।१०।।

अददास्त्वं जीवनविभात ! मे मुदितां ज्योतिस्सारम् ।
पुनरागच्छ, देहि रसरङ्गम्, शैशव ! पाह्युपकारम् !
भावे सुरचापावर्तनमसि, नानावर्णसृजनमसि ।
त्वं मङ्गलकेकीनर्तनमसि, घनो मनोरञ्जनमसि ।।११।।

त्वमरोदस्तु पयोदाकृष्टिः, दृग्भ्यां मुक्तावृष्टिः ।
अहसस्त्वं मन्येऽभूत् हृष्टिः, रम्यसुमनसः सृष्टिः ।
त्वं चित्प्रभाविलासानंतः, पुष्पितभाववसंतः ।
योगे रसो, वियोगे मृत्युः, जीवनमस्याद्यंतः ।।१२।।

अद्य विना त्वामन्तःकरणे रसशून्यं पिकतानम् ।
शिखी न नृत्यति, मधुपचेतना गायत्यद्य न गानम् ।
उरश्च दृशौ ज्वालया सिञ्चति चन्द्रकला रसयन्ती ।
पूर्वस्याः दाहयति शीतला दीपकशिखा द्रवन्ती ॥१३॥

तिमिरजीवनो हृदयतडागः कुमुदविलासविहीनः ।
साम्प्रतमहं वर्णरसदीनः, शून्ये प्रभाविलीनः ।
प्रसूवियोगो बंधनयोगो लोपश्चितिप्रभायाः ।
सीदति तमसि रसो, भीषिकया दशत्यहिर्मायायाः ॥१४॥

रसो लुलोप जनन्या सार्धम्, कुत्र शैशवानन्दः ।
हृदयं सहते दहनमसह्यं, वर्षति लोचनकन्दः ।
जीवनतर्या संतराम्यहं मायाब्धि संसारम् ।
सहमानो विभीषिकावर्तम् चिन्ताघनप्रहारम् ॥१५॥

तरी जीवनं, कर्णग्राहो मनोऽर्णवः संसारः ।
संतर्यते भ्रान्तिपथबुद्ध्या दुस्तरपारावारः ।
प्रभां ददाति जलव्यपदेशान्मनोहरति तटरङ्गः ।
उरः प्रीणयति जीवनकुसुमैर्नृत्यति तडित्तरङ्गः ॥१६॥

कुत्र याति शिशुहृदयलासिनी ज्योतिर्मयी मृदुलता ।
त्यक्त्वा तटमुरसानुभूयते तमसि तारिकाकुलता ।
कुत्र न जाने जीवनकूलं ? चिदानन्दरसमूलम् ?
गृह्णे द्युतिकुसुमान्निव तूलं, सहे तमोऽग्निं शूलम् ॥१७॥

गर्जति भयं, कम्पते तारा, प्रकृतिरस्ति भयकारा ।
ग्रसते व्याधिराहुरावर्तः, तमो वमति विषधारा ।
करोत्युपलवृष्टिं घनविघ्नो, गर्जत्याधिष्कालः ।
दृशि दृशि ताण्डवनृत्यं कुरुते भयरोषो विकरालः ॥१८॥

दृग्भ्याम् किञ्चिन्तया दृश्यते, भयं ! तमोऽकूपारः !
परुषतया क्रियते भवभीत्या वर्तुलरवप्रहारः ।

जीवति तमो, ज्योतिरपि जीवति, विपदा वसति समोदः।
हलाहलं वर्षयति, वर्षयति रसमपि भाग्यपयोदः ॥१९॥

उत्साहोऽस्ति सफलताधारो, जयप्रभागलहारः।
साहसेन जीयते ज्योतिषा तमसो धाराधारः।
नाविक ! रक्ष विबुधविश्वासं, पश्य न भयभृतचित्रम्।
केनिपातमाशां जहीहि मा, मा त्यज धैर्यमरित्रम्॥२०॥

साहसेन जय पथावरोधं, कुर्वरित्रमुत्साहम्।
पश्य मङ्गलालोकं, संतर भीषणतमःप्रवाहम्।
ज्योतिर्द्रक्ष्यति तिमिरविनाशं चोज्ज्वलभावाकाशम्।
स्मर जननीं सरस्वतीं, कृपया नाशय मायापाशम् ॥२१॥

प्रतिभामददात् कवेर्द्रवन्ती ते सरस्वतीं माता।
प्रभां च ददौ द्रवितगुरुसोमश्चिन्मङ्गलरसदाता।
प्रभां पश्य मङ्गलरससारं, मावसीद, चल पारम्।
ज्ञानालोकं कुर्वाधारं, संतर पारावारम् ॥२२॥८२॥

# उड्डय, मनोविहंग !

वीक्ष्य विक्लवं मनश्चातकं, चिन्मङ्गलं तिरोभूतम् ।
का नीलिमा दुनोति ? वर्षयति ममतालोचनजीमूतम् !
उडवश्रूणि पातयति ममता दृष्ट्वा मानसविक्षेपम् ?
का रजनी हृद्दाहं शमयति ? लिम्पति विधुप्रभालेपम् ॥१॥

शीतलतया हरति संतापं, तापहारिणी का छाया ?
शक्तिरस्ति का ? यस्याः प्रभया क्षियते मनस्तमो माया।
विकासयति मम मानसकमलं, का पूषाज्योतिः ख्याता ?
रसवर्षिणी कास्ति घनशोभा ? तर्कयाम्यहं, मे माता ॥२॥

ममतामयी हरति हृत्तापं शिशिरतया रसदानमयी ।
मनस्तर्पयति सौरभसुधया स्फूर्तितरंगाह्वानमयी ।
मोहकतया हरितघनरसदा सुर्सुर्सन्सन्गानमयी ।
चैतन्यं प्रीणाति मङ्गला श्रान्तिहरा पवनामयी ॥३॥

चन्द्रकरेव गतासि, निष्ठुरे ! ममते ! मम शून्यं सदनम् ।
अद्य न चुम्बसि, यदचुम्बस्त्वं, कदा स्मरसि लहरीवदनम् ?
मातः ! कुत्र करोषि विहारं दत्त्वा श्यामलसंसारम् ?
ज्ञाननयनहीनोऽस्मि कथमहं संतरामि पारावारम् ? ४॥

तमोनिधिं सादयति विवशता, लयवर्षी लोचनकंदः ।
आह्वयाम्यहं द्रवसि न ममते !, कथमाप्यते प्रभानंदः ।
करुणाकरे ! न मुक्तिं दत्से, जीवननिशा तिमिरकारा ।
ग्रावा द्रवति, न कथं द्रावयति जननीं मम दृग्जलधारा ? ।५॥

मातुः स्मरत्यङ्कसुखहीनो, ममते ! किं पश्यसि बालम् ?
कथमुपैमि दर्शनं ? पादयोः पातयामि मातः ! भालम् ।
दास्यसि किं त्वमाञ्चलच्छायां ? पूर्वरसं ? नंदनवातम् ?
दास्यसि किं जीवनप्रभातं ? म्लानमस्ति मुखजलजातम् ॥६॥

यत्राम्बिके ! त्वमसि, तल्लोके विलसति दीपकमाला ।
किं कुर्वे ? व्यालीव दशति मां तमोभूताभवशाला ।
यद्यपि मे स्खलनं, मन्ये कथमुचितं त्यागविचारम् ?
अनावृतं कुरु मोक्षद्वारं, याचे चिद्रससारम् ॥७॥

हे करुणाकरपवन ! कथय, तत्र कुत्र नन्दनं ? यामि ।
इतो कियद्दूरं तरुगगनं ? पल्लवोऽस्मि, पृच्छामि ।
विकासयति कीदृशो वसंतो द्योतितानि कुसुमानि ?
कुत्राप्नोमि सुरभिमानन्दं ? सुधामृतानि फलानि ? ८॥

कुत्र महाचितिवेणुं श्रुत्वा मुह्यति मनोविमलता ?
नरीनृत्यते जेगीयते च रासरताविह्वलता ?
स्फुरति तडिन्नृत्यत्युल्लासो, गायति कलाविकासः ।
रसयति भावकानने गोपाघनश्यामकृतरासः ।९॥

राघववर्णधरा वसुंधरा राघवमयी ललामा,
राघववर्णधरो धराधरः, कान्तिः सुखदा श्यामा ।
ईहे वर्णमाधुरीं द्रष्टुं, भावाम्बरमधुमासम् ।
ईहे मङ्गलरसं पुष्पितं चेहे चिद्भवलासम् ॥१०॥

चल, सुरसरिता यत्राप्यन्ते द्योतितसितकमलानि ।
मानसहंस ! लभस्व मानसं प्राप्तुं मुत्यफलानि ।
खग ! चल, यत्र परमसुखदात्री मातुरञ्चलच्छाया ।
प्रभया चंद्रः सुधां पाययति; तुदति न तमसा माया ॥११॥

उड्डय, मनोविहग ! चल गगनं, यत्र निष्ठुरा मे माता ।
प्रभाकुसुमभृतनीलवसंतः यत्र लसति चिद्रसदाता ।
अङ्के पुष्यति यत्र जनन्याः द्युतिरसभृतशिशुभावलता ।
तल्लोकं चल, चन्द्रकलायां यत्र तिलोऽपि न दाहकता ॥१२॥

तमोविमुक्तमधुपचेतनया यत्राप्यते प्रसूनमुदः ।
मनःपतङ्ग ! तत्र चल, चन्द्रं ग्रसते यत्र न विधुंतुदः ।
दत्ते प्रभारसेनपूरितं फलं यत्र पादपषण्डः,
चल नन्दनं, यत्र रात्रावपि नास्तं गच्छति मार्तण्डः॥१३॥

# सौन्दर्यरहस्यम्

मातस्त्वं नंदनमधुमासा, द्योतितरसभृतकुसुमविकासा ।
दिव्ये ! त्वं चिन्मङ्गलहासा, सुरभितरञ्जितभावविलासा ॥१॥

तर्पयामि जीवनपावनतामर्पयामि दीपं धूपम् ।
विधुप्रभायाः सिद्धायतने पूजयामि देवीरूपम् ॥२॥

मनोरञ्जयसि नवनवरङ्गैः त्वमसि मसृणतालेखा ।
चाकचक्यपूरितं गिरौ त्वं प्रभानिर्झरीरेखा ।
रुषाकणैः त्वमुषादृग्ज्वाला क्षितिजविद्रुमैर्माला ।
कुहू चन्द्रिका भवति, हससि चेद् दीप्यत्याम्बरशाला ॥३॥

त्वं टलमलाकरोषि, मानसे भाति नभोदृक्तारा ।
त्वं झलमलाकरोषि, लासयसि भूत्वा ज्योतिर्धारा ।
त्वं कलकलाकरोषि, वत्सले ! जीवननदीतरङ्गे ।
जलबिन्दवः पतन्ति, भाससे झलज्झलारसरङ्गे ॥४॥

रजतविभा त्वं, शुक्तयः शक्तिर्दाहतास्यनले त्वम् ।
त्वमसि सौरभः, शक्तिः कुसुमे, जीवनमयी जले त्वम् ।
तपने तपनस्त्वं, त्वं चन्द्रे प्रद्योतः प्रह्लादः ।
त्वं रामे रामत्वं, शक्त्या भवमङ्गलप्रसादः ॥५॥

आत्मा रसः, तनुः शब्दार्थौ, त्वमसि शिवमयी शक्तिः ।
सौन्दर्यानुभूतिसौरभिता त्वं सत्याभिव्यक्तिः ।
भावमयी त्वं, ह्लादमयी त्वं, चिन्मङ्गलामला त्वम् ।
शारदासि कवियशोदायिनी, त्वं कवितासि, कला त्वम् ॥६॥

त्वमसि सिंधुगाम्भीर्यतलता, त्वं विधुवदनोज्ज्वलता।
विटपच्छायायाः शीतलता, ज्योत्स्नायाः निर्मलता।
त्वं गिरिधैर्यम्, धरणीस्थैर्यम्, हरिज्जीवनं शस्यम्।
रवितेजोऽसि, सुमनसो हासः, त्वं सौन्दर्यरहस्यम् ॥७॥

त्वं बिम्बिता मुखोज्ज्वलतायां कुमुदैः स्मिता सरलता।
त्वं कुसुमेषु मसृणता, रूपे मौक्तिककान्तितरलता।
त्वं भूजातजीवनं, त्वमसि च सर्वधर्मरससारा।
त्वमस्यनंतशान्तिविस्तारा गङ्गाशुचिताधारा ॥८॥

आत्मोच्चताधराधरशिखरे त्वं सौन्दर्यविधात्री।
त्वं निष्कामकर्मगीतायाः प्रभासुधारसदात्री।
त्वं वर्षसि, पाथोदो वर्षति, धरापिपासाहारिणि।
हालाहलं पिबसि शिवशक्ते! सुरभवमङ्गलकारिणि ॥९॥

स्वप्रभया रञ्जयसि, सञ्जयसि मातः! व्रतति वितानम्।
महाचेतने! ममते! वर्षसि, कुरुषे जीवनदानम्।
त्वं गायसि, गायति चेतनता, प्रकृतिर्गायति गानम्।
त्वं खलु कुरुषे प्रकृतिदर्शितं चित्सौन्दर्यविधानम्।
॥१०॥१०५॥

# आत्मोच्चतायाः शिखरे

आत्मोच्चता हिमालयशिखरं रससौन्दर्यनिधानम् ।
आत्मदर्शनं सूर्यदर्शनं ज्योतिश्चात्मज्ञानम् ।
आत्मधवलिमा प्रभाधवलिमा गङ्गा शुचिताधामा ।
हृदजीवनदर्पणे विमलता चन्द्रकलास्त्यभिरामा ॥१॥

आत्महासतुल्यं वासंती – नंदनकुसुमविकासः ।
हिमधवलास्ति ह्यात्मशीतलता, हरिता चात्मोल्लासः ।
प्रेमारुणो, हिरण्यं ह्लादो, रविदर्शनप्रसादः ।
अस्ति गिरामृतसदृशं मधुरं निर्झरकलकलनादः ॥२॥

व्यासगुहा शिवमयी, शिवमयी यथा व्यासकविकविता ।
तपोमंदिरं गुहा, महर्षिः तपश्चर्यया सविता ॥।
सूर्यरुदेति, नमति चैतन्यं शिवं दिवं च ललामम् ।
पद्मायते, दर्शयति बिम्बं प्रकृतिर्दृशेऽभिरामम् ॥३॥

दर्शयति प्रकृतिः चेतनतारङ्गबिम्बमिव रङ्गम् ।
भृङ्गाली गायति गायन्तं दृष्ट्वा चिद्भवभृङ्गम् ।
विहङ्गमा कूजति. कूजन्तं पश्यत्यात्मविहङ्गम् ।
हृदवीचिर्नृत्यति पश्यन्ती चितिनृतिरङ्गतरंगम् ॥४॥

भावनभः पूरयते प्रभया करैरुदितकरमाली ।
भुङ्क्ते तारकमुक्तानन्दं शुचिमानसे मराली ।
भास्करदर्शनमात्मोद्योतो, द्युतिहासो मधुमासः ।
भावोन्नयनहिमाद्रेः शृङ्गे चिन्मयधवलविलासः ॥५॥

रविरुदेति, चेतनां रञ्जयति भवसुन्दरताधारः ।
आकर्षयति चेतनारङ्गैः प्रकृतिकुसुमसंसारः ।
चैतन्याय दीयते रविना वर्णवर्णसुन्दरता ।
सुन्दर्यास्ति गृहीत्वा बिम्बं प्रकृतेः परनिर्भर्ता ॥६॥

देवीरूपे दिव्यदर्शनं, शिवरूपे कल्याणम् ।
दिनकररूपे प्रभादर्शनं चात्मदर्शनं त्राणम् ।
रूपे रूपे मङ्गलहेतोः शक्त्याः दर्शनमेकम् ।
गिरिरङ्गैः रञ्जयति मंदिरे प्रकृतिर्भावोद्रेकम् ॥७॥११२॥

# चिद्रसविधानम्

मनो धावते, विमलीकुरुते सुरगङ्गेव विकारम्,
प्रेरणयानावृतं करोति च भवकल्याणद्वारम्।
आचारो, जागरयति मैत्रीं, प्रेरयते सत्सङ्गम्,
शुचितां सम्वर्धयति, वितरति त्यागतरङ्गितरङ्गम् ॥१॥

आचारः छायाशीतलता, तुष्टिरसः सेवायाः,
त्यागरसेन यशोफलदाता, प्रेम्णा रिपुर्घृणायाः।
आचारोऽस्ति सरलताशोभा, शिवपथोऽस्ति शुचितायाः,
मृदुलतया मृदुलता पुष्पिता, जीवनरसः प्रभायाः ॥२॥

शुभमाचरणं चितिजागरणं ह्याचारः शिवशरणम्,
प्रभावतरणं चात्माभरणं सकलमनोमलहरणम्।
अघगरणं षड्रिपुसंहरणं मनस्तमोदरदरणम्,
जगदुद्धारणधरणं धर्मः कीर्तिधवलिमावरणम् ॥३॥

अस्त्याचारो मनोविमलता, चिन्मङ्गलरसदानम्,
कल्याणाय चरित्रोज्ज्वलता, प्रभया राष्ट्रोत्थानम्।
जीवनपावनता गङ्गायाः, रसभृतमनःप्रयागः,
सेवासुरभितजगदनुरागः, यशोधवलितस्त्यागः ॥४॥

स्वार्थो धर्मकृते क्षयरोगः, त्यागोऽस्ति चरसभोगः।
धर्मः प्रेममानसं, धर्मः सेवाप्रेरकयोगः।
धर्मो विद्या, यया नश्यते मनस्तमःपरिवेशः।
धर्मप्रभा विश्वबन्धुत्वं, धर्मरैक्यसंदेशः ॥५॥

सत्यं नाम धर्मभारत्याः धर्मविवेको न्यायः।
भ्रष्टाचारतमोहरधर्मः, षड्रिपुकदनोपायः।
घनरसवर्षी धर्मनम्रता, क्षमा क्रोधरिपुधर्मः।
धर्मो भवहितैषिणी करुणा, धर्मो रक्षावर्मः ॥६॥

विधुप्रभेव मानसे विलसति धर्मद्युतिनिर्मलता ।
पावनतायाः रसं पाययति गंगाधर्मोज्ज्वलता ।
धर्मो नाम चिद्रसस्रोतः, तमोऽपहप्रद्योतः ।
जगत्पयोधिसंतरणहेतोः जीवनमंगलपोतः ॥७॥

स्वार्थो हन्ति जीवनं त्यागं, फणी दशत्यनुरागम्,
द्वेषं जनयति, जनयति रागं, दुष्यति मनः प्रयागम् ।
धर्मो लुम्पति कल्मषभारं, पवते जगदाचारम् ।
प्रभा योजयति तारं तारं, रसः पाति संसारम् ॥८॥

धर्मो ज्ञानप्रभया नयनं, गुणसुरभितजगदयनम् ।
धर्मो दिशति जीवनोन्नयनं, धर्मोऽस्ति च पथचयनम् ।
धर्मो लोकसेविनीभक्तिः, स्वार्थनाशिनी–बुद्धिः ।
धर्मो देशसेविनीव्यक्तिः, धर्मो मानसशुद्धिः ॥९॥

धर्मस्तमसो ज्योतिर्गमयति, कुरुते चिद्रसदानम् ।
चात्मबलेनावति मानवतां, दिशति कीर्तिपंथानम् ।
वर्णैर्लसत्येकतासूत्रे धर्मकुसुमभृतहारः ।
सूत्रं त्रुटति, मालिका नश्यति, नश्यति कुसुमाधारः॥१०॥

मनोमधुकरो गायति गुंजनमिषात् यस्य गुणगानम् ।
सत्प्रेरकं जीवनादर्शं कमलवदनमम्लानम् ॥

कर्दमगृहे जायते कमलम्,
नास्ति पङ्किलं जीवनममलम् ।
वितरति सुरभि रसमुत्क्षिप्तम्,
जीवति जीवनाच्च निर्लिप्तम् ।

अनुभवेन हृदयं पश्यन्निव कविरधिगच्छति भानम्–
सत्प्रेरकं जीवनादर्शं कमलवदनमम्लानम् ॥

ज्ञाने जलजमुरो मृदुतायाः,
मसृणरसश्चेतनाप्रभायाः ।
आत्मबिम्बरविदर्शी कमलम् ,
शुचितागङ्गाहृदयं धवलम् ।
जगदाननमम्लानं कुरुते रङ्गसुरभिरसदानम् ।
सत्प्रेरकं जीवनादर्शं कमलवदनमम्लानम् ।।
जानीते न जीवनासङ्गम् ,
स्पृशति नैकमपि विषयतरङ्गम् ।
पश्यति तमो न मायारङ्गम् ,
दृष्टिः पश्यत्यात्मपतङ्गम् ।
बुद्ध्वा त्यागे यशः सेवते रसः त्यागपंथानम् ।
सत्प्रेरकं जीवनादर्शं कमलवदनमम्लानम् ।।११।।
त्यागव्रतः तपति यो रविरिव, जगत्प्रेमहृदयो योऽस्ति ,
यस्य कर्म निष्काममङ्गलं, सेवाभावमयो योऽस्ति ,
मारुतिरिव वैराग्योपेतः पृथितोऽकामबलो योऽस्ति ,
शतदलमिव निर्लिप्तजीवनो, यशसा मुखोज्ज्वलो योऽस्ति ,
राष्ट्रकृते बलिदानभावना यस्य शाश्वती कल्याणी ,
मातुरङ्कसौख्यं लभते सः तिमिरपाशमुक्तः प्राणी ।।१२।।
रमते प्रसू विश्वबंधुत्वे प्रेम चैकताभावे ।
रमते त्यागव्रते च विरमति सेवार्थं हृद्द्रावे ।।१३।।
तिमिरपाशमुक्तिः स्वत्यागो, भवसेवा, जगदनुरागः ,
जीवनादनासक्तिरब्जमिव, शुचितायाः मङ्गलयागः ।
शूलेभ्यः स्पृहयामि, धरायै ददे कुसुमहासं लासम् ।
कण्टकमालिङ्गत्युत्साहो दातुं मङ्गलमधुमासम् ।।१४।।
याचे सहिष्णुतां विचारपावनतां ,
विद्ये ! विवेकशक्तिमनुपमां देहि ।

द्रष्टुं ज्वलन्तरुषावेशमाविष्टम् ,
हे विश्वमङ्गले क्षमे ! क्षमां देहि ॥१५॥

पश्यामि गौरवाननं सुधादर्शे ,
रसजीवनं पयोदनम्रते ! देहि ।
गुणरञ्जितं प्रसूनजीवनं रसितम् ,
हे सौरभिते प्रेरणे ! लते ! देहि ॥१६॥

हे निर्मलते ! मनोमंदिराज्ज्योत्स्ने ! त्वं दूरापेतम् ।
शुभकर्मोदकेन धावित्वा संप्रति मया कृतम् श्वेतम् ।
त्वं प्रसीद, चिन्मङ्गलहेतोर्मा सेवस्वाकाशवनम् ।
करिष्यामि पूजां, वासं कुरु, शून्यमस्ति सिद्धायतनम् ॥१७॥

दत्स्व जननि ! मे जगदनुरक्तिम् ,
पवनतनयसेवाभक्तिम् ।
धरणीमङ्गलहेतोर्लम्भय ,
गरलपानरतशिवशक्तिम् ॥१८॥

गीत्वा राष्ट्रजागरणगानम्
यो धावति मातरमुद्धर्तुं, मन्ये देवसमानम् ।
यशसा जीवति, राष्ट्रकृते यः स्वीकरोति बलिदानम् ।
तमोबन्धनान्मुक्तिं दत्ते शोणितगङ्गास्नानम् ।
धन्यो, भारतमङ्लहेतोर्यस्य भवत्यवसानम् ।
सः पराम्बिकोत्सङ्गे कुरुते चिन्मङ्गलरसपानम् ।
तस्मै सरस्वती कविशब्दैर्दत्ते ध्रुवसम्मानम् ।
तनोत्याभुवो गगनं यावत् प्रभया कीर्तिवितानम् ।
॥१९॥१३१॥

# मङ्गलप्रभा

स्वार्थंवृत्तिरीक्षयत्यसत्स्नेहं प्रभावमदिरायाः ।
गाढरङ्गमीक्षयति मृदुलता भ्रमपरिमला प्रभायाः ।
प्रेमसुरभिवञ्चनया रसयति मनः श्यामलोज्ज्वलता ।
दयादयास्ति, हन्ति विश्वासं, परुषप्रा: कोमलता ।।१।।

नाक्रमणं, परिणतिं दर्शयत्यभिनयेन कल्याणी ।
विषं ददाति रसव्यपदेशाद्भ्रममयता पाषाणी ।
कनकलतास्त्यभिशप्तजीवना मनोहरत्यवदातम् ।
हरितरसं शोषयति, शोणितं पिबति, तुदति भूजातम् ।।२।।

तृष्णे ! मुदमधुसौरभमाप्तुं नव्योत्साहमयी त्वम् ।
घनतामिस्रमयो त्वं क्षणदाद्युतिमवगाहमयी त्वम् ।
कर्षति मनोगजं तिमिरं प्रति भीषा ग्राहमयी त्वम् ।
मुग्धतया रसदाहमयी त्वं, विषप्रवाहमयी त्वम् ।।३।।

षड्विकारपालिके! तमिस्रे! अशुभे! पापमयी त्वम् ।
त्वमसि जीवनालोकनाशिनी, जगदभिशापमयी त्वम् ।
उरो ज्वालयसि, तापमयी त्वं, मधुसंतापमयी त्वम् ।
नशितुं भावतरङ्गरसत्वं भ्रमरसजापमयी त्वम् ।।४।।

कारणरूपं नाम पातकस्तिमिरो लोभो वामः ।
व्याधिगरलदाता रसभ्रमः सुरभिजीवनः कामः ।
क्रियते ज्वलितचिन्तया क्रमशः हरितविग्रहः क्षामः ।
तनोर्मनोदहनं, न संशयो रुष्जागृतिपरिणामः ।।५।।

विषयरसेन कामना जीवति, यस्याः दुहितासक्तिः ।
क्रोधोऽवतरति, बाधितास्ति चेत् क्वचित् कामनाशक्तिः।
क्रोधात्मजोऽविवेकः कुरुते बुद्धिक्षयरसदानम् ।
श्रेयप्रेयसाधनाद् व्यक्तिः पतति, नश्यति ज्ञानम् ।।६।।

रूढिं वहत्यन्धविश्वासस्तमो वहति पाखण्डः ।
घनतमिस्रपाशेन बध्यते कथं धर्ममार्तण्डः ।
उपकृतचेतनया जगदखिलं देवं प्रत्यघशङ्की ।
प्रभाजीवनश्चोज्ज्वलवदनः सुधाकरोऽस्ति कलङ्की ।।७।।

सरिज्जीवनं दर्पणहृदयं विमलमुद्‌गमस्थाने ।
किञ्चद्दूरे ज्योत्स्नासारोः लुप्यति कथं ? न जाने ।
शुचिता कुत्र? कुत्र निर्मलता? कुत्र सुधारसदात्री ?
स्वार्थलीलया जीवनधात्री नदी प्रदूषणधात्री ।।८।।

स्वार्थो गिराविषं दत्ते, छलं स्वार्थस्य धीवलम् ।
दत्ते फलमघं स्वार्थः, पाखण्डो भ्रममङ्गलम् ।।९।।
ईर्ष्याविषमयी तृष्णा, लोभोद्दीपनमस्ति या ।
दर्शयति तडिज्ज्योतीरसं ददाति दाहकम् ।।११।।

क्रोधो विहन्ति दाहेन, मोहो भ्रमरसेन च ।
लोभो विषेन तृष्णायाः, मनःशूलेन मत्सरः ।।११।।
मदो दृशौ च मीलित्वा तमसा हन्ति मद्यपम् ।
सौरभेन प्रसूनानां कामो हन्ति पौरुषम् ।।१२।।

सौरभेन जागरयति कामः । रङ्गेनाकर्षयति ललामः ।
मसृणतया कुसुमेन संस्पृशति । कुसुमायुधो मदेन प्रहरति ।
मनोमोहयति कुहकच्छाया । हन्ति रसेन माधुरी माया ।।१३।।

स्वार्थो ननु जनयति मनोमलम् ।
प्रवाहयति निम्नगाजीवने प्रदूषणं किं वा हलाहलम्!
किं ददाति रोषोऽपि मदान्धो? नयनाभ्यामारक्तपरिमलम् !
गात्ररुधिरदाहीतुषानलम् ।।१४।।

कुसङ्गोऽस्ति नाशयितुमाचरणसौन्दर्यम् क्षयरोगः ।
गुणनाशिनी जागृतिः कूपे तमसि दुष्पतनयोगः ।

सुमतिनाशको दुर्मतिजनको धराशिरसि गुरुभारः ।
धूम्रमुखं पतनस्य वहत्ययशोऽमङ्गलावतारः ॥१५॥

अपत्रारणकामाय पथशूलोऽस्ति दुर्जनः ।
शमनाय गृहज्वाला, रक्षणाय फणीधरः ॥१६॥

स्रावयति कर्मगङ्गामुद्योगो जन्तूनामुद्धर्तुम् ।
दरिद्रतायाः मृत्युर्माग्यमुद्योगस्यानुचरः ॥१७॥

श्रमः सफलतामंत्रः, कर्मदोषो दरिद्रता ।
सिद्धलक्षणमुद्योगश्चोत्साहो रसजीवनम् ॥१८॥

सुतः स्वावलम्ब्यस्ति नाम संकल्पस्याध्यवसायः ।
संकल्पस्य बलं श्रमहेतोः रसोद्दीपनोपायः ।
श्रमो जीवनं, सिद्धोत्साहः कर्मसफलताद्वारम् ।
श्रमसाफल्यम् दत्ते कान्तिं कर्मतनोरुपहारम् ॥१९॥

चितामुक्तिश्चिन्ता श्रमहरितभूजीवनमयी ।
अभावं पश्यन्ती प्रहरति शरैः, हन्त्यलसताम् ।
विभाते चित्स्फूर्त्या रसयति धराम‍ङ्कुशधरा ।
प्रभा कर्मक्षेत्रं तमचुररवैर्जागरयति ॥२०॥

स्थलपद्मं विकसति सोत्साहस्तीक्ष्णकण्टकैः सार्धम् ।
यच्चैतन्यं विकसति शूले, तदभिधीयते कुसुमम् ।
जीवति, यो जानाति विकसनम्, शूलगृहेऽपि विलसनम् ।
पाशबन्धमपि विफलीकृत्वा मधुरसरङ्गैर्हसनम् ॥२१॥

'तपनो भव दातुं प्रद्योतं,' कथयति दीपकृशानुः ।
'भवप्रभां दातुं तपनो भव,' करैरुपदिशति भानुः ।
क्लेशं सहमानस्तप, यशसा जीव, रवे! चिन्मङ्गल ।
लोकालोकरसं दातुं ज्वल, हरितरसं दातुं ज्वल ॥२२॥

पथं रुणद्धि विफलताहेतोः प्रस्तरबाधाकारा ।
प्रवहति भवजीवनरसभरिता समयनिम्नगाधारा ।

प्रेरयतीव रसेन पोषयन् भूजातं सोत्साहः ।
चरैवेति, मा विरम कर्मपथि, निगदति नदीप्रवाहः ॥२३॥

दत्ते सौरभितं प्रसूनमुरसो विश्वाय सत्प्रेरणा ।
रात्र्यन्धं हरते सहस्रकिरणैः सूर्यस्य तेजस्विता ।
राका प्रेरयते मनोऽमलतया 'वाण्या' सुधां वासयेत्,
व्याजान्मुग्धरसेनसिक्तकुमुदैश्चन्द्रप्रभां हासयेत् ॥२४॥

नम्रतास्ति पदोच्चत्वं, लघुतास्ति महीयसी ।
नम्रता जीवनादर्शो कान्त्याश्च गौरवमुखम् ॥२५॥

अस्ति जीवनं जगदनुरागः । जीवनरसं प्रदत्ते त्यागः ।
जीवनमस्त्यैक्तताप्रयागः । सेवायै मानसरसभागः ॥२६॥

जीवनमस्ति गाम्भीर्यम्, यस्य नाम पयोनिधिः ।
गगनं यस्य विस्तारो, विमलतास्ति चन्द्रिका ॥२७॥

जीवनशुचिता कीर्तिः, घनवृष्टिर्दयामृता ।
उत्कर्षोऽस्ति गिरिशृङ्गश्चादर्शो भवमङ्गलम् ॥२८॥

आदर्शजीवनं नाम गङ्गाजीवननिर्मलम् ।
मानसदर्पणे वक्त्रे रूपं पश्यति कौमुदी ॥२९॥

अस्त्याचारो राष्ट्रोत्थानम् । सत्सङ्गत्या तमोऽवसानम् ।
समं शुचितया गङ्गास्नानम् । सौन्दर्येण समं रसदानम् ॥
निर्मलतया चन्द्रिकाहासः । मुखोज्ज्वलतया कुमुदविलासः ।
सुरभितरसः, प्रभाविश्वासः । आचारश्चिन्मङ्गलरासः ॥
आचारोऽस्ति नभोविस्तारः । भवजीवनसुन्दरताधारः ।
गम्भीरत्वात् पारावारः । समं रसेनोपनिषत्सारः ॥
आचारो जीवनरसदाता । आचारो वसुन्धरात्राता ।
आचारः कल्याणविधाता । आचारेण लभ्यते माता ॥
॥३०॥१६१॥

# पद्मा मातुरंचलमवाप

हर्तुं परतन्त्रतान्धकारम्, कर्तुं प्रभया राष्ट्रोद्धारम्,
द्रष्टुं स्वाधीनतापतङ्गम्, द्रष्टुमुल्लसितमनस्तरङ्गम्,
पद्मा युयुधे, स्वर्गं लेभे, चात्मोत्सर्गसृष्टिमारेभे ।
लोकमगच्छत् पराम्बिकायाः, चिद्रसमाप्तुं गृहे प्रभायाः ।
यशसा जीवति नारी युद्ध्वा, प्रथमोत्सर्गमहत्वं बुद्ध्वा ।
कुर्वे जीवनगाथागानम्, कृत्वा श्रद्धाञ्जलिं प्रदानम् ॥१॥

पारतंत्र्यतमो हर्तुं प्रेरणाद्युतिदायिनम् ।
स्मरामि प्रथमोत्सर्गं पद्मायाः समराङ्गणे ॥२॥

जीवति, यशसा त्यागो, लोकसेवा रसेन च ।
जीव्यते बलिदानेन देशभक्तिर्यशस्विनी ॥३॥

वैरीणां गुलिकान् भुक्त्वा प्राणान् तत्याज वन्दिनी ।
अशुभं गात्रमधावद् वहता रक्तधारया ॥४॥

आसीच्छिवो धर्मपथदर्शी प्रिया प्रभासीत् शक्तिः ।
पद्मा नाम शिवस्य सुतासील्लोकसेविनीभक्तिः ।
श्रुत्वा सुरभितमधुमयतानम् जगौ कोकिला गानम् ।
अभवत् पद्माननमम्लानम् पद्माननमम्लानम् ॥५॥

आसीद्गात्रं कोमलतायाः, मसृणोद्योतलतायाः ।
रूपं तरलकान्तिसुषमायाः, मनश्च विधुप्रभायाः ।
बलिदानोत्सुकजीवनमासीदमृतदेशसेवायाः ।
पावकेन सिञ्चितं भविष्यं यशसश्चोज्ज्वलतायाः ॥६॥

सरो रसमयोऽभवद्गृहीत्वा रसवर्षीसत्सङ्गम् ।
सरित्तरङ्गोऽनृत्यद्दृष्ट्वा नर्तितमनस्तरङ्गम् ।
अभरत् शिशुता वर्णमाधुरीं प्रकृतिकलाव्यापारे ।
सदा वसन्तर्तुः समदृश्यत पद्मायाः संसारे ॥७॥

सम्बलं गृहीत्वोत्साहधनम्, करगतं च कृत्वा छत्रधनम् ।
मनसो गतिना सदनं सदनम् लेभे देवीसिद्धायतनम् ।
मंदिरं प्राप्यच्छिवदुहिता, रूपं ददर्श दृष्टिदृष्टिः ।
देवीदर्शनमकरोत् शीघ्रं लतया सह भक्तमनोहृष्टिः ॥८॥

हरदाप्रसादमाप्त्वा पद्मा मेलाशोभाद्रष्टुमव्रजत् ।
विकिरन्ती सुरभितरङ्गरसं सुन्दरता सख्या सहाभ्रमत् ।
रक्षिस्थानादागमद्भयं सह राजपूरुषैर्बलधारी ।
अत्याचारी व्यचरदमृग्यत नयनाभ्यां रूपवती नारी ॥९॥

परवशः प्रतीच्याः किमपश्यत् रक्तिमदृग्वदनो करमाली ।
शकटं क्षिप्त्वा द्वौ वंदिन्यौ सत्वरमपलायत बलशाली ।
प्रारोदीतुच्चभयार्तरवैः पद्मा स्वतंत्रताद्युतिनाशे ।
दामिनी मुक्तिहेतोर्येते कम्पिता तमोभूतघनपाशे ॥१०॥

खे डिड्ये रिपुमुखदुर्गन्धः पद्माहेतोर्मृत्योर्बन्धः ।
शून्यं जग्राह मदस्खलितो मधुपायी क्रूरः कामान्धः ।
मधुघटौ पपौ, मधुघटौ पपौ, दृष्ट्या भयतिमिरः प्रत्यक्षम् ।
घनसंश्लेषं विफलीकृत्वा विद्युदरक्षज्ज्योतिर्वक्षम् ॥११॥

चिन्तयाञ्चकार विवशपद्मा, किं तमोबन्धने? विषपानम् ।
संदृश्य भाग्यरव्यवसानं भयमुक्तिर्जीवनबलिदानम् ।
अरिमदशयनं सेतुं चाप्त्वाप्रणमत् प्रवाहिनीजलधाराम् ।
नर्मदां चुकूर्दे लतया सह सकटं हित्वा त्यक्त्वा कराम् ॥१२॥

सहमाना कुलिशशिलाघातं भूमौ पपात मूर्च्छिता लता ।
रक्तमस्रावयद्भग्नशिरः खं डिड्ये ज्योतिर्दिवंगता ।
निष्प्रभमूर्च्छिताहता न्यपतत् सिकताङ्के पद्मा श्लथकाया ।
मरितुं न शशाक, विफलयत्नं द्रष्टुं शशाक मृत्योर्माया ॥१३॥

हिमपातमपश्यन्नीरवता त्रिधुयामिन्यासीत् हिमधवला।
मूर्च्छा सेहे तमसः पीड़ां, पद्मा नाभवच्छिशिरकवला।
नाविकः क्षिपन् दूराद् दृष्टिं वेगेन दधाव तटग्रामात्।
असुरक्षी कन्यां गृहमनयत् सुन्दरताविक्रयलोभवशात्॥१४॥

प्रत्यावर्तनञ्चेतनथाः ह्यनुभवदसह्यपीडाबोधम्।
प्रकटीकुर्वद् विक्षिप्ततया रोदनं भीतभावं क्रोधम्।
कालक्षीमनीयत, भिषग्वरैरचिकित्स्यत, धीसंज्ञाहीना,
स्वस्था चानीयत कर्णपुरं विक्रयकामाय पराधीना "१५"

अक्रीयत पञ्चशतीं दत्त्वा शतरञ्जीमोहाले बाला॥
शाश्वतवंदिन्यै पद्मायै कारा बभूव वेश्याशाला।
जीवनमासीन्नृत्यं गानं शाश्वतकामुकपुरुषाह्वानम्।
शिव-सखी-स्मृतिर्जननीघ्यानं, चैकान्तरोदनं, विषपानम्॥१६॥

नर्तक्यजीजनोऽभूत् पद्मा कान्तविग्रहा समुज्ज्वला।
तारयाचकस्तारस्तारः, कलायाचिका चन्द्रकला।
तिलोत्तमापि सुन्दरी लब्ध्वा तिलरसरूपमनोहरताम्।
स्रष्टा कथं ससर्ज निरुपमां विश्वमोहिनीसुन्दरताम्॥१७॥

पद्माह्वयत् राष्ट्रसेवायै वेश्यालयपत्रमपत्रमा।
अये स्वसारः! सपदि ह्रापयत यूयं रिपुशिरसश्छत्रमा।
गर्हे सुन्दरताव्यापारं, वारांगनारसाधारमा।
तडिद् दर्शयति घनांधकारं, प्रभा दिशति निरयद्वारमा॥१८॥

नृत्यति गायति कलाचेतना, जीवनरसदायिनी लता।
कलागौरवं नाद्रियते सः, यं प्रसादयति मादकता।
नृत्यकलायाः मूल्यमुदात्तं परीक्षते सहृदयदृष्टिः।
सीदति गानकलामाधुर्ये मानसः शुचितायाः हृष्टिः॥१८॥

दरीदृश्यते द्रावकदृष्टिर्यथा कामुकालिः कमलम् ।
जेघ्रीयते रूपगतसुरभिं, सेषिच्यते नयनयुगलम् ।
दर्शयितुं ताण्डवभीषणतां नर्तिष्यामः रणे वयम् ।
यतिष्यामहे द्रष्टुं शीघ्रं स्वतंत्रताभास्वानुदयम् ॥२०॥

जागरयिष्यति शूरामर्षम् देशभक्तिरसभृतगानम् ।
क्रान्तिरसेन राष्ट्रमुद्धर्तुं मन्येऽहं गङ्गास्नानम् ।
वयं क्रान्तिकारिण्यः सर्वाः, जागरयिष्यामः क्रोधम् ।
योत्स्यामहे, चिकीर्षिष्यामः शत्रून् हत्वा प्रतिशोधम् ॥२१॥

शस्त्रधरा पद्मास्ति चञ्चला, शस्त्रधरा ह्यबला सबला ।
गृह्यन्तामायुधाः, दीक्ष्यताम् लक्ष्यभेदिकासिद्धकला ।
रुरुदिषामि, सेहिमहे, चक्रम चिरापमानं विषपानम् ।
मङ्गलरसं स्वादयिष्यामः, दास्यति जीवनबलिदानम् ॥२२॥

अविकासयच्चेतनापद्मं वेला निविडतमोनाशा ।
अद्राक्षीन्मङ्गलपंथानं प्रभारञ्जिता पूर्वाशा ।
अजीजनदजीजनहेतोश्चेत् सितजातिर्जीवनपङ्कम् ।
पद्माननरक्तिमते ! रुषया देहि सूत्तरं निश्शङ्कम् ॥२३॥

वाराङ्गनाः कौशलं प्रापुः
सरित्सरोवरसंतरणे,
हयारोहणे खड्गसंगरे
भयदर्शने भुशुण्डिरणे ॥२४॥

श्यामलयुद्धवलाहकमध्ये शम्पेवाहं परिस्फुरामि ।
पद्मावदत्, पुष्परसदातुं शूलविषं प्राप्तुं वाञ्छामि ।
भारतसेवाव्रतं व्रतं मे, स्वतंत्रतां लब्धुं जीवामि ।
कीदृशशलभरसं बलिदीपे, स्वयं स्वादयित्वा ज्ञास्यामि ॥२५॥

अहं क्षालयिष्यामि संगरे बलिरक्तेनाशुभगात्रम् ।
नवजीवनं स्वदेशे धृत्वा दर्शयामि विमलं पात्रम् ।
तनुं पविष्यति दग्ध्वा वह्निर्मुक्ति दास्यति सरिज्जलम् ।
देशभक्तिगङ्गायां सत्त्वा हरिष्याम्यहं मनोमलम् ॥२६॥

अस्ति शृङ्खलाबद्धा जननी,
सहते तमोव्यथां विवशम् ।
प्राणपणेनोद्धारणयत्नम्,
दास्यति चिन्मङ्गलं रसम् ॥२७॥

क्रान्त्याः हेतोः पर्यावरणं
स्रष्टुं शत्रुभ्यो विपरीतम् ।
सह सखीदलेन जगौ पद्मा
देशानुरागजागृतिगीतम् ॥२८॥

स्वतंत्रतायुद्धं जेतुमहं प्रेहे क्रान्तिसमीरम् ।
आह्वयामि वीरं रणधीरम् ॥

येन सह्यते पुष्पं मत्वा
गुलिका हसन् सगर्वः,
शोणितेन मण्ड्यते, मन्यते
शूलालिङ्गनपर्वः ।

यो द्रष्टुं शक्नोति न भारतजननीलोचननीरम् ।
आह्वयामि वीरं रणधीरम् ॥

यो दत्ते रिपुदर्पशक्तये
रणमङ्गलप्रसादम् ,
म्रियते दातुं रसं जीवनं
स्वतन्त्रतायाः ह्लादम् ।

भक्तिर्यस्य चिकीर्षति हर्तुं मातुर्व्यथां गभीरम् ।
आह्वयामि वीरं रणधीरम् ॥

य: पराजयति कालमजेयं
रणधीरः संग्रामे,
ईक्षे यस्य जीवनादर्शम्
राष्ट्रोद्धारकरामे ।

त्यागभावजीवनं रसमयं सेवाभावशरीरम् ।
आह्वयामि वीरं रणधीरम् ॥२६॥

कालं प्रति जागरयामर्षम् ।
जेतुमजेयं कुरु संघर्षम् ॥

रणवीरोऽस्ति धरित्रीत्राता ।
शूरो भारतभाग्यविधाता ।
दयाघनो, यो जीवनदाता ।
धिक्तम्, यस्य वंदिनी माता ।

दलयन् शत्रुदलं दुर्धर्षम् ।
भ्रातः ! देहि जनन्यै हर्षम् ॥३०॥

मा स्वीकुरु दासत्वं, क्रुद्धम् ।
भावमुपजनय शत्रुविरुद्धम् ॥

क्रान्तीरायां दर्शय रोषम् ।
प्रकटय तडित्शिरायां प्लोषम् ।
शत्रुञ्जहि, ! गुञ्जय जयघोषम् ।
देहि धरामात्रे संतोषम् ।

कं मंत्रये ! बंधुमुद्बुद्धम् !
स्वतंत्रतामाप्तुं कुरु युद्धम् ॥३१॥

पश्य धरामरिपाशे त्रस्तम् ।
असिभुशुण्डिलसितं कुरु हस्तम् ।।

त्यज रिपुसेवां, पङ्कविचारम् ।
मा वह दासत्वं, शिरभारम् ।
प्राप्नुव देशभक्तिरससारम् ।
कुरु भारतवसुन्धरोद्धारम् ।

कुरु परवत्तातिमिरं ध्वस्तम् ।
उदिहि, रवे ! कुरु पथप्रशस्तम् ।।३२।।

कुर्वाङ्ग्लानां शोणितपानम् ।
वा कुरुष्व जीवनबलिदानम् ।।

स म्रियते, यो वहति कलङ्कम् ,
यस्य जीवनं धत्ते पङ्कम् ।
तुदति देशसेवां प्रति रङ्कम् ।
प्रसू, ददाति न रसभृतमङ्कम् ।



स्वतंत्रतायै क्रान्त्याह्वानम् ।
मन्ये चिन्मङ्गलसोपानम् ।।३३।।

आह्वयामि विक्रमरसहासम् ,
वीरभावदामिनीविलासम् ।।

अपेह्यरिच्छायामनुसरणम् ।
ईहे क्रान्तिभावजागरणम् ।
दर्शय रिपोः शष्ट्रमाहरणम् ,
शूलचुम्बनं, मृत्योर्वरणम् ।

आह्वयामि सुरभितविश्वासम् ,
स्वतंत्रतापुष्पितमधुमासम् ।।३४।।

शक्तिमता रणधर्मो ध्रियते ।
राष्ट्रकृते बलिदानं क्रियते ।।
येन पूर्यते हृदयतडागः,
रसः कथ्यते जगदनुरागः ।
येन पूयते मनःप्रयागः,
जीवनरसो मन्यते त्यागः ।
व्रियते यशः, शोणितं स्त्रियते,
रसदानेन जीव्यते म्रियते ।।३५।।
भ्रातः ! शृण्वेकताभियानम्,
कर्मजागरणगीताह्वानम् ।।
ते जीवनं सुरक्षां कर्तुम् ।
ते जीवनं स्वदेशं भर्तुम् ।
ते जीवनं दनुजसंहर्तुम् ।
ते जीवनं राष्ट्रमुद्धर्तुम् ।
शृणुतात् राष्टभक्तिभृतगानम् ।
कुरु भारतसेवारसदानम् ।।३६।।
सेवापथः सखीभिश्चेयम् । राष्ट्रभक्तिभृतगानं गेयम् ।
क्रान्तिभावजागरणं ध्येयम् । स्वतंत्रतासंग्रामो जेयम् ।।३७।।
काप्यवादयत् सखी मृदङ्गम् ।
काप्यनर्तयत् क्रान्तितरङ्गम् ।।
आप्तुं भारतसुरभिमतीतम् ।
अभयं कर्तुं देशं भीतम् ।
मोक्तुं द्विरदं ग्राहगृहीतम् ।
पद्मा जगौ क्रान्तिरसगीतम् ।
क्रान्तिरदत्त चेतनारङ्गम् ।
रुधिरेणारञ्जयत् पतङ्गम् ।।३८।।

आसीत् पद्मा स्नेहे स्नेहे ।
प्रश्नवर्षिणी गेहे गेहे ॥
कुत्र शिवस्य हलाहलपानम् ?
शिविदधीचिजीवनबलिदानम् ?
हरिश्चन्द्रनृपसत्यविधानम् ?
त्यागयशोभृतराजस्थानम् ?
परिस्फुरिच्चपलासीद्देहे ।
क्रान्तिरजागः, कष्टं सेहे ॥३९॥
अस्ति कुत्र ?, किं विधिः प्रतीपः ?
सेवाभावो नाम दिलीपः ।
कथमीक्षे राष्ट्रस्योत्कर्षम् ?
रामादर्शम् ? जनजनहर्षम् ?
कथमीक्षे शत्रुघ्नामर्षम् ?
जननीधरोद्धारणोद्धर्षम् ?
तमो वर्धते, कोऽपि न दीपः ।
कुत्र न जाने प्रभामहीपः ॥४०॥
कं द्रावयति राष्ट्रहृत्तापः ?
बधिरकृते किं प्रसूविलापः ?
स्वतंत्रताजीवनरसदाता
कुत्र शिवा भूभाग्यविधाता ?
कुत्र यशोमूर्तिर्विख्याता
देशसेविनी पद्मा माता ?
कथं ह्रियेत भूद्रापोद्रापः ?
कुत्र धरोद्धारकः प्रतापः ? ॥४१॥
साहसमाह्वय सिंधौ सेतुम् ।
उद्योगं [illegible] कुरु शत्रुं [illegible] जेतुम् ॥
जीवय शवं, नमय चाकाशम् ।
कुरु पिशाचबलदर्पविनाशम् ।
कर्तय तमोविवशतापाशम् ।
प्रापय चिन्मङ्गलप्रकाशम् ।
शूलं सोढुं स्मर वृषकेतुम् ।
स्वतंत्रतायाः सूर्यमुदेतुम् ॥४२॥

श्रुत्वा क्रान्तिस्वरं जटायुः ।
मेनेऽधुना ववृधे ह्यायुः ॥
ववौ क्रान्तिपवमानोऽमन्दः ।
वीरोऽभवन्मूषकच्छन्दः ।
बभूवानलोऽरुणद्कन्दः ।
वृष्टिरभूत् शोणितनिष्यन्दः ॥
प्रववौ समरोत्साही वायुः ।
सिंहरूपमभवद्गोमायुः ॥४३॥
क्रान्तिर्व्यरचद् भयं नशित्वा पर्यावरणमभीतम् ।
श्रुत्वा राष्ट्रजागरणगीतम् ॥

रक्तं स्थलपद्माननमभवत्,
किंशुकमभवत् रक्तम्
पद्मा चक्रे क्रान्तिरञ्जितं
भारतमातुर्भक्तम् ।
अभूत् कोकनदवदनं रक्तं मङ्गलमिव प्रतीतम् ।
श्रुत्वा राष्ट्रजागरणगीतम् ॥
घनशोणितबिन्दुभिः प्ररुरुचे
क्षैतिजविद्रुमरेखा ।
घटे घटे क्रान्त्योर्मिमपश्यत्
रङ्गदर्शिनीलेखा ।
क्रान्त्या रक्तिममुखेनाक्रियत भीतमरिमुखं पीतम् ।
श्रुत्वा राष्ट्रजागरणगीतम् ॥४४॥

नानाक्रामत् ह्वीलरदुर्गं, शत्रवे ददौ भयभृतदैन्यम् ।
दनुजो ददर्श दुर्गं परितो दृष्ट्यावरुद्धया यमसैन्यम् ।
मेघेव शतघ्न्यो गर्जन्त्यो गोलान् वोमुर्ज्वालया समम् ।
प्राणानहरञ्च भुशुण्डिरुषा गुलिकावदनेनाह्वयन् यमम् ॥४५॥
दुर्गं निरूपा च बहिर्दुर्गात् स्थितकूपोऽवर्तत शवसानम् ।
प्रक्षिप्तशवाः भोक्तुमकुर्वन्नघफलमिव वैतरणीस्नानम् ।
पावकमवर्षयन्मार्तण्डः । मृत्युर्बभूव पावकदण्डः ।
रक्षी नासीत् पादपषण्डः । वह्निनास्पृशद्वातश्चण्डः ॥४६॥

योगो बभूव पावकभोगः, पावकभोगस्संगररोगः ।
संगररोगस्तिमिरोद्योगः, तिमिरोद्योगो मृत्योर्योगः ।
सैनिकवृन्दाय ददौ पद्मा सार्धम् दलेन युद्धोत्साहम् ।
वातः प्रावाद्घृतमिवाक्षिपद् वर्धयितुं क्रोधानलदाहम् ।।४७।।
प्रापयद् वह्निचूर्णम् दिशि दिशि गोलान् प्रापयत् यथास्थानम् ।
प्रत्येकं वीरं प्रति पेदे कृत्वा विद्युद्गत्याह्वानम् ।
सान्त्वनां क्षतेभ्यो ददौ रणे, रसपूरितशब्दैर्क्षणे क्षणे ।
मिष्टान्नं शूरानभक्षयज्जयसाहसमभरत् कणे कणे ।।४८।।
पयमपाययत् संयुगवीरान्, व्यतरत् सुस्वादुफलानि रणे ।
मधुभृतगीतकान्यजेगीयत चौषधिं लिलेप व्रणे व्रणे ।
दृष्ट्वा देशद्रोहिणं जनं खड्गेनाकरोत् शिरश्च्छेदम् ।
प्राणानर्पितुमैच्छद् दृष्ट्वा पक्षस्य पतन्तम् प्रस्वेदम् ।।४६।।
आसीदसितडित्प्रभा हस्ते, श्रोण्यामासीत् गुलिकामाला ।
चांशालम्बिनीभुशुण्ड्यासीत्, सेनान्यासीत् पद्मा बाला ।
आसीदबला युद्धे सबला स्फूर्त्या परिस्फुरन्ती चपला ।
गुलिकाः ववर्ष संयुगकुशला कुहकेनादृश्यत शक्तिकला ।।५०।।
रुधिरेणाशाम्यत खड्गतृषा, चामुण्डा प्राप शिरोहारम् ।
अगणितशत्रून् हत्वा पद्मा प्राप्नोत् संयुगे प्रतीकारम् ।।५१।।
रिपुरकरोत् पाशे कर्णपुरं, पद्मा सेहे पव्याघातम् ।
सिंहिनीं बबन्ध तदनु दृष्ट्वा रणसाहसमूलसमुत्खातम् ।
पद्मा जगाद पंजरबद्धा, भारतं जयतु भारतं जयतु ।
शक्तिं स्वदेशभक्तिर्जनयतु, या शत्रुशोणितं रणे धयतु ।।५२।।
'तुभ्यं नमामि भारतमातः! शिरसा नमाम्यहं जनं जनम् ।
गृह्णामि राष्ट्रजनचरणरजं, प्रणमामि साश्रुदृग्घनं घनम् ।
सन्निधौ वन्दिनीमद्राक्षीद् बलवद् हेब्लाकोऽत्याचारी ।
बलपतिर्जातविस्मयोऽवदत्, 'विश्वेऽस्ति सुन्दरीयं नारी ।।५३।।
सुन्दरि! निजगाद मोहितोऽसौ, चेत् त्वया सपदि याच्यते क्षमा ।
दास्याम्यभयं तुभ्यं बाले ! भव बलपतिजाया मनोरमा ।
पद्मा जगर्ज, पुष्फोर तडिद्, विषजिह्व न दर्शय कालभयम् ।
बलिदानमस्ति मे महोत्सवो, जयदंभी पश्यतु यशोजयम्

ग्रामानदहच्चार्भकनारीश्चिक्षेप यदा दहने नीलः ।
तस्य स्त्रियमदर्शयत् हर्तुम् किं दरादरं विलपन् श्रीलः ?
त्वं रिपुरत्याचारी चेदसि, भारतबालाहं रिपुंदमा ।
प्राणान् रक्षितुं यते नाहं, शृणु, भीरुतया याच्यते क्षमा ।।५५।।
कामी चिन्तयते कामबलां ? किं नापश्यन्मे युद्धकलाम् ?
राष्ट्रं स्वतंत्रमाप्तुं न शशक मृत्युं सेविष्ये यशोज्ज्वलाम् ।
इङ्गनादिशद् बलाधिपतिः, तत्क्षणमभवद् गुलिकावृष्टिः ।
विद्धाङ्गापद्मायाः गात्रादभवत् शोणितधारासृष्टिः ।।५६।।
शतगुलिकाः बुभुजे मौनरवा भारतमातुर्दुहितागात्रम् ।
बलिदानरक्तनद्यां सत्वा पद्मा बभूव शुचितापात्रम् ।
अङ्के धराम्बिकायाः न्यपतत् शवरूपं गात्रं पद्मायाः ।
चिन्मङ्गलमयीप्रभाच्छाया चालभताञ्चलं पराम्बायाः ।।५७।।
अमरत्वं ददौ रसत्यागो, भारतजननीं प्रत्यनुरागः,
शुचितायाः जनसेवाभागः, पातुं भवगरलं शिवभागः ।
पद्मा लेभे जननीस्नेहं, लेभे गृहहीना द्युतिगेहम्,
चिन्मङ्गलरविदर्शनमकरोत् हित्वा पाशं तिमिरं देहम् ।।५८।।
आत्मबलिदानेन यस्याः लोकसेवा जायते,
चरितशुचितायाः प्रभावात् चिन्मलं प्रपलायते ।
प्रेक्ष्यं भारतदुर्गतिं यस्यै सुधापि विषायते,
प्रेरयित्री, नाम पद्मा, राष्ट्रभक्तिं त्रायते ।।५९।।
राष्ट्रमुद्धरणाय चिच्ये क्रान्तिपंथानं वरम् ।
आत्मबलिदानेन च ददौ देशभक्तिरसं परम् ।
अत्यजत् पद्मा सखीभिः सह तनुं स्मृत्वा हरम् ।
अम्बरं चरमस्वरं जग्राह वंदे मातरम् ।।६०।।२२१।।